# प्रौढानुभूतिः

https://sa.wikisource.org/s/1s8k

प्रौढप्रौढनिजानुभूतिगलितद्वैतेन्द्रजालो गुरु

र्गूढं गूढमघौघदुष्टकुधियां स्पष्टं सुधीशालिनाम् ।

स्वान्ते सम्यगिहानुभूतमपि सच्छिशिष्यावबोधाय त

त्सत्यं संस्मृतवान्समस्तजगतां नैजं निजालोकनात् ॥ १॥

द्वैतं मय्यखिलं समुत्थितमिदं मिथ्या मनःकल्पितं

तोयं तोयविवर्जिते मरुतले भ्रान्त्यैव सिद्धं न हि ।

यद्येवं खलु दृश्यमेतदखिलं नाहं न वा तन्मम

प्रौढानन्दचिदेकसन्मयवपुः शुद्धोऽस्म्यखण्डोऽस्म्यहम् ॥ २॥

देहो नाहमचेतनोऽयमनिशं कुड्यादिवन्निश्चितो

नाहं प्राणमयोऽपि वा दृतिधृतो वायुर्यथा निश्चितः ।

सोऽहं नापि मनोमयः कपिचलः कार्पण्यदुष्टो न वा

बुद्धिर्बुद्धकुवृत्तिकेव कुहना नाज्ञानमन्धंतमः ॥ ३॥

नाहं खादिरपि स्फुटं मरुतलभ्राजत्पयःसाम्यत

स्तेभ्यो नित्यविलक्षणोऽखिलदृशिः सौरप्रकाशो यथा ।

दृश्यैः सङ्गविवर्जितो गगनवत्संपूर्णरूपोऽस्म्यहं

वस्तुस्थित्यनुरोधतस्त्वहमिदं वीच्यादि सिन्धुर्यथा ॥ ४॥

निर्द्वैतोऽस्म्यहमस्मि निर्मलचिदाकाशोऽस्मि पूर्णोऽस्म्यहं

निर्देहोऽस्मि निरिन्द्रियोऽस्मि नितरां निष्प्राणवर्गोऽस्म्यहम् ।

निर्मुक्ताशुभमानसोऽस्मि विगलद्विज्ञानकोशोऽस्म्यहं

निर्मायोऽस्मि निरन्तरोऽस्मि विपुलप्रौढप्रकाशोऽस्म्यहम् ॥ ५॥

मत्तोऽन्यन्न हि किंचिदस्ति यदि चिद्भास्यं ततस्तन्मृषा

गुञ्जावह्निवदेव सर्वकलनाधिष्ठानभूतोऽस्म्यहम् ।

सर्वस्यापि दृगस्म्यहं समरसः शान्तोऽस्म्यपापोऽस्म्यहं

पूर्णोऽस्मि द्वयवर्जितोऽस्मि विपुलाकाशोऽस्मि नित्योऽस्म्यहम् ॥ ६॥

मय्यस्मिन्परमार्थके श्रुतिशिरोवेद्ये स्वतो भासने

का वा विप्रतिपत्तिरेतदखिलं भात्येव यत्संनिधेः ।

सौरालोकवशात्प्रतीतमखिलं पश्यन्न तस्मिञ्जनः

संदिग्धोऽस्त्यत एव केवलशिवः कोऽपि प्रकाशोऽस्म्यहम् ॥ ७॥

नित्यस्फूर्तिमयोऽस्मि निर्मलसदाकाशोऽस्मि शान्तोऽस्म्यहं

नित्यानन्दमयोऽस्मि निर्गतमहामोहान्धकारोऽस्म्यहम् ।

विज्ञातं परमार्थतत्त्वमखिलं नैजं निरस्ताशुभं

मुक्तप्राप्यमपास्तभेदकलनाकैवल्यसंज्ञोऽस्म्यहम् ॥ ८॥

स्वाप्नद्वैतवदेव जाग्रतमपि द्वैतं मनोमात्रकं

मिथ्येत्येव विहाय सच्चिदमलस्वान्तैकरूपोऽस्म्यहम् ।

यद्वा वेद्यमशेषमेतदनिशं मद्रूपमेवेत्यपि

ज्ञात्वा त्यक्तमरुन्महोदधिरिव प्रौढो गभीरोऽस्म्यहम् ॥ ९॥

गन्तव्यं किमिहास्ति सर्वपरिपूर्णस्याप्यखण्डाकृतेः

कर्तव्यं किमिहास्ति निष्क्रियतनोर्मोक्षैकरूपस्य मे ।

निर्द्वैतस्य न हेयमन्यदपि वा नो वाप्युपेयान्तरं

शान्तोऽद्यास्मि विमुक्ततोयविमलो मेघो यथा निर्मलः ॥ १०॥

किं न प्राप्तमितः पुरा किमधुना लब्धं विचारादिना

यस्मात्तत्सुखरूपमेव सततं जाज्वल्यमानोऽस्म्यहम् ।

किं वापेक्ष्यमिहापि मय्यतितरां मिथ्याविचारादिकं

द्वैताद्वैतविवर्जिते समरसे मौनं परं संमतम् ॥ ११॥

श्रोतव्यं च किमस्ति पूर्णसुदृशो मिथ्यापरोक्षस्य मे

मन्तव्यं च न मेऽस्ति किंचिदपि वा निःसंशयज्योतिषः ।

ध्यातृध्येयविभेदहानिवपुषो न ध्येयमस्त्येव मे

सर्वात्मैकमहारसस्य सततं नो वा समाधिर्मम ॥ १२॥

आत्मानात्मविवेचनापि मम नो विद्वत्कृता रोचते

ऽनात्मा नास्ति यदस्ति गोचरवपुः को वा विवेक्तुं क्षमी ।

मिथ्यावादविचारचिन्तनमहो कुर्वन्त्यदृष्टात्मका

भ्रान्ता एव न पारगा दृढधियस्तूष्णीं शिलावत्स्थितः ॥ १३॥

वस्तुस्थित्यनुरोधतस्त्वहमहो कश्चित्पदार्थो न चा

प्येवं कोऽपि विभामि संततदृशी वाङ्मानसागोचरः ।

निष्पापोऽस्म्यभयोऽस्म्यहं विगतदुःशङ्काकलङ्कोऽस्म्यहं

संशान्तानुपमानशीतलमहःप्रौढप्रकाशोऽस्म्यहम् ॥ १४॥

योऽहं पूर्वमितः प्रशान्तकलनाशुद्धोऽस्मि बुद्धोऽस्म्यहं

यस्मान्मत्त इदं समुत्थितमभूदेतन्मया धार्यते ।

मय्येव प्रलयं प्रयाति निरधिष्ठानाय तस्मै सदा

सत्यानन्दचिदात्मकाय विपुलप्रज्ञाय मह्यं नमः ॥ १५॥

सत्ताचित्सुखरूपमस्ति सततं नाहं च न त्वं मृषा

नेदं वापि जगत्प्रदृष्टमखिलं नास्तीति जानीहि भो ।

यत्प्रोक्तं करुणावशात्त्वयि मया तत्सत्यमेतत्स्फुटं

श्रद्धत्स्वानघ शुद्धबुद्धिरसि चेन्मात्रास्तु ते संशयः ॥ १६॥

स्वारस्यैकसुबोधचारुमनसे प्रौढानुभूतिस्त्वियं

दातव्या न तु मोहदुग्धकुधिये दुष्टान्तरङ्गाय च ।

येयं रम्यविदर्पितोत्तमशिरः प्राप्ता चकास्ति स्वयं

सा चेन्मर्कटहस्तदेशपतिता किं राजते केतकी ॥ १७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य

श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छङ्करभगवतः कृतौ

प्रौढानुभूतिः संपूर्णा ॥